अवजित्याऽसाव् इन्द्रायोर्वशीम् अर्पयित्वेन्द्रस्य सख्यम् अवापाऽनेन प्रियकर्मणा। एकदा भरतेन लक्ष्मी-स्वयंवराऽऽख्यरूपकम् अभिनयार्थं प्रवर्तितम्। तत्र नृत्यन्त्य् उर्वशी पुरूरवसम् अवलोक्य कुसुमशर-शर-प्रहार-पीडिता भरतेनाऽऽदिष्टम् अभिनयं विस्मृत्य नृत्ये स्खलनम् अकरोत्, तां तथा दृष्ट्वा तस्याश् च कामोन्माद-जनित-प्रमादम् असहमानो भरतः 'पञ्चपञ्चाशद् अब्दानि भूतले लता भूत्वाऽस्य वियोगम् अनुभविष्यसि पुरूरवाश् च पिशाचत्वं गमिष्यतीति शापम् अदात्। अनेन व्यतिकरेणोर्वशी-पुरूरवसोर् मिथः संयोगाऽनन्तरं दीर्घ-कालिको वियोगोऽजायत। तयोर् अष्टौ पुत्राश् चोदपद्यन्तेति कथा-सन्दर्भश् च वर्णितोऽस्ति।

भागवते प्रकाराऽन्तरेणोपक्रान्तेयं कथा शतपथब्राह्मणोक्त-नयेन चाऽवसीयते। पुरूरवसो रूपौदार्य-शीलैश्वर्य-विक्रमाऽऽदिगुणान् नारदेनेन्द्र-भवने जेगीयमानान् निशम्य स्मर-शराऽऽर्दितोर्वशी मित्रा-वरुणयोः शापान् मर्त्यलोकम् आसाद्य नृपाऽन्तिकम् उपातिष्ठत। पूर्वोक्तविधिना च परस्परं समयं विधाय परिणीय च तां पुरूरवाः—

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया।
तन्मुखामोदमुषितो मुमुदेऽहर्गणान् बहून्॥[11]

इति वचनात् तया सह रममाणो बहुसमयम् अनैषीत्। तत उर्वशीम् इन्द्र-लोकेऽनवलोकयन् महेन्द्रो गन्धर्वास् ताम् आनेतुम् अचोदयत्। ब्राह्मणोक्त-प्रकारेण निर्गतायाम् उर्वश्याम् उन्मत्त इव समन्तात् परिभ्रमन् विभ्रान्त-मनाः पुरूरवाः कदाचित् कुरुक्षेत्रे सरस्वती-नद्यां पञ्चभिः सखीभिर् विहरन्तीम् अन्तर्वत्नीम् उर्वशीम् उपालक्ष्यैनाम् आत्म-निवेदन-पूर्वकम् आनेतुम् अयतत। परम् उर्वशी तस्य निवेदनम् अस्वीकृत्योवाच—

क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा।
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः॥
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत।
विधायालीक-विश्रम्भमज्ञेषु त्यक्तसौहृदाः।
नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः॥[12]

इति ब्राह्मणोक्त-नयेनोपस्तुतेभ्यो गन्धर्वेभ्यो प्राप्ताम् अग्नि-स्थालीम् एव मोहवशाद् उर्वशीं मन्यमानस् ताम् आदाय अटवीतोऽटवीं परिभ्रमन्न् असौ कालान्तरे प्रबोधम् उपागम्याग्नि-स्थालीम् अरण्ये परित्यज्योर्वशीम् आध्यायन् स्वगृहे चिरम् उवास। त्रेतायां सम्प्रवृत्तायाम् एतस्य मनसि त्रयी प्रादुरभूत्। स पुनस्तत्रैवाऽगाद् यत्र पुराऽग्नेः स्थालीम् अक्षिपत्। तत्र शमी-गर्भम् अश्वत्थम् एकम् उपलभ्याऽस्माद् अरणी-द्वयं सम्पाद्योर्वशीलोककाम्यया मन्थनेनाऽग्नि-त्रयम् उत्पाद्य गन्धर्व-लोकम् अयासीत्।

सेयं कथा गृहीताऽन्यथा कथासरित्सागरे सद्भिरेव सरसताम् उपैति। नन्दन-वने विहरन्तं परम-

११. भागवतपुराणम्, ९, १४, २५।

१२. भागवत०, ९, १४, ३६-३८।

वैष्णवं पुरूरवसम् उद्वीक्ष्योत्कण्ठितोर्वशी काम-परवशताम् उपागमत् । पुरूरवा अपि तद्-अङ्ग-लावण्येन वन्य-करीव करेणु-गन्धेनाऽऽकृष्यमाणऽनङ्ग-शर-शरण्यताम् उपेत्याऽमराङ्गनाऽङ्ग-परिष्वङ्गाऽर्थम् उत्सुकीभूयाऽऽङ्ग्ष्व् अङ्गार-दाहम् अन्वभूत् । तस्येदृशीम् अवस्थां विलोक्य दर्शनार्थम् उपागत-नारद-मुखेनेन्द्रम् उर्वशीम् ऐलायाऽर्पयितुम् आज्ञापयामास हरिः । नारदः पुरूरवसा सहेन्द्रम् उपागत्योर्वशीम् अस्मै दापयामास । दिव्याङ्गनाम् आदाय मर्त्यलोकम् आससादाऽमरालयात् पृथिवी-पतिः । एकदा दानवैः सह सञ्जाते सग्राम-संरम्भे साहाय्यार्थं समाहूतः पुरूरवाः स्वर् लोकम् अगात् । कदाचित् तत्र संप्रवृत्ते नृत्योत्सवे स्खलिताऽभिनयां रम्भाम् अवलोक्योपाहसन् नराधिपः । तद्-विषये सविशेषम् अनुयुक्तः पुरूरवाः प्रत्यवोचत् । 'जानेऽहमुर्वशीसंगात्तद्वेत्ति न तुम्बुरुर्' इति । तत्रैव सन्निहितम् तुम्बुरुर् ईदृशीम् अयश-स्करीम् अखर्व-गर्वोक्तिम् आकर्ण्य 'उर्वश्यास्ते वियोगः स्यादाकृष्णाराधनाद् इति' शापम् अस्माय् आदिशत् । ततोऽकस्माद् एवोर्वशी गन्धर्वैर् अपहृता । शाप-दोष-जन्यम् इमम् अशनि-पातम् इव विपत्-सम्पातम् अवबुध्य राजा बद्रिकाऽऽश्रमे कृतेनोग्रतपसा हरिम् आराध्य तत्-प्रसादेनोर्वशीम् आसाद्य तया सह चिराय रममाणः पृथिव्याम् उवास ।[१३]

एवं विविधं परिवर्तनम् अङ्गीकुर्वाणा नाना-रूपधरेयं कथा कालिदासस्य कला कृति-कोविदं करम् आकलय्य रूपक-रूपेण रुपान्तरम् आसाद्य सहृदयानां हृदयान्य् आवर्जयति । कविकुल-गुरु-कालिदासेन कथावस्त्व् इदं कुत आसादितम् अस्मिन् विषये सन्ति विदुषां विप्रत्तिपत्तयः । तथाहि—केचन पद्मपुराणम् आश्रित्य विक्रमोर्वशीयं प्रणिनायेति मन्वते ।[१४] अपरे मत्स्य-पुराणम् एवाऽस्य त्रोटकस्याऽऽधार-भित्तिर् अस्तीति समामनन्ति ।[१५] किन्तु मत्स्यपुराणोक्तं कथास्वरूपं स्वतन्त्रं वा कालिदास-प्रतिपादित-कथानकाऽऽश्रितम् एव वेति पुराणनिर्माण-काल-निर्णयाऽभावे निश्चेतुम् अशक्यम् ।[१६] विष्णु-पुराण एवाऽस्य रूपकस्य मूल-रूपम् अन्वेषणीयम् इति च परे गवेषणा-विशारदा अभ्युपगच्छन्ति ।[१७]

वस्तुतो यत्किञ्चिद् अपि कथावस्तु कालिदासेन स्वीकृतं तद् आत्म-सात् कृत्वा रूपकेऽस्मिन् सर्वथाऽभिनव-रूपेणोपबृंहितम् इत्य् आलोचना-कृद्भिर् ऐकमत्येन स्वीक्रियते । तथाहि—

दानवेन्द्रात् केशिनश् चित्रलेखा-द्वितीयाम् उर्वशीम् उद्धृत्याऽप्सरोगणं चित्ररथेन सहैवेन्द्र-सकाशं प्रेषयति पुरूरवा न तु पुराणोक्त-दिशा स्वयं प्रापयति, मदन-बाण-हतस्य पुरूरवसः कामयमानाऽवस्थाया वक्ष्यमाणत्वात् । विटपलग्नैकावली-प्रसङ्गश् च शाकुन्तलोक्तेन तत् सन्निभेन प्रसङ्गेन संवदति ।[१८]

---

१३. कथासरित्-सागर, ३, ३, ४-३० ।

१४. डा० हरदत्त शर्मा, (पद्मपुराण एण्ड कालिदास); विण्टरनित्स, हिस्ट्री आफ इण्डियन लिट्रेचर, भा० १, पृ० ५४ टि० १) ।

१५. आंठल्ये तथा भावे, विक्रमोर्वशीयस्य भूमिका, पृ० १६ ।

१६. द्र० सु० क० दे० (हिस्ट्री आफ संस्कृत लिट्रेचर); दासगुप्त सं०, भा० १, पृ० १३८ टि० २ ।

१७. सु० कु० दे० (हिस्ट्री आफ संस्कृत लिट्रेचर) ।

१८. तु० अभिज्ञानशाकुन्तलम्, २, २३; विक्र०, १, १५, तः उत्तरम् ।

रूपक-वस्तु-विकासाऽर्थम् औशीनरी-चरित्र-चित्रणम् अपि कालिदासोपज्ञम् एव । निपुणिका-नैपुण्येन विदूषकात् प्रणय-रहस्योद्भेदन-विधिर् अपि कवि-कल्पना-प्रसूतः । विदूषक-सकाशात् परिभ्रष्टम् अकस्माद् देवी-हस्तम् उपागतम् उर्वशी-प्रेषित-प्रणय-पत्रम् पुरूरवसो लज्जानिमित्तम् आपद्यते । एतेन व्यतिकरेणैतस्याऽवदातं चरित्रम् अन्तःपुरेषु दाक्षिण्यातिरेकश् च प्रेक्षावताम् अक्षिगोचरताम् आयाति । मणि-हर्म्य-दृश्यम् अपि सर्वेषाम् आमोदाय कल्पते । लक्ष्मी-स्वयंवराऽवसरे कालिदासेन पुरूरवसः स्वर्गे सान्निध्यम् आवश्यकम् इति परिहृतम् । तस्मिन्न् अवसरे लक्ष्मी-भूमिकायां वर्तमानोर्वशी वारुणी-भूमिकायां वर्तमानया मेनकया पृष्टा 'सखि ! समागता एते त्रैलोक्यसुपुरुषाः सकेशवा लोकपालाः एतस्मिंस् ते भावाऽभिनिवेश इति ।......ततस् तया पुरुषोत्तम इति भवितव्ये पुरूरवसीति निर्गता वाणी'[१९] अस्माद् विस्खलनाद् उपाध्यायेन भरत-मुनिना 'येन ममोपदेशस् त्वया लङ्घितस् तेन न ते दिव्यं स्थानं भविष्यती'ति सा शापाऽऽस्पदीकृता । पुराणाऽपेक्षया शापाऽऽदेशोऽप्य् अत्र बलवत्तरं कारणम् आवहति, प्रसङ्ग-संगतिं चासज्जततिराम् प्रेक्षणाऽवसाने पश्चात्तापेन लज्जाऽवनत-मुखीम् उर्वशीम् अव-लोक्या-ऽनुकम्पा-कातरीभूतो महेन्द्रस् ताम् अवोचत् 'यस्मिन् बद्धभावाऽसि तस्य मे रणसहायस्य राजर्षेः प्रियम् अत्र करणीयम् । सा त्वं यथाकामं पुरूरवसम् उपतिष्ठस्व यावत् स त्वयि दृष्ट-सन्तानो भवेद्'[२०] इति । महेन्द्रस्याऽयं शापस् तस्याः परमोपकाराय कल्पते; परम्परा-प्राप्तम् अश्लीलत्वम् अपाकृत्य कथाप्रसंगे रमणीयताम् आपाद-यति च । 'त्रिः स्म माह्नः श्नथयो वैतसेन'[२१] इति वेदोक्तस्य विचित्रस्य समयस्य स्थाने महेन्द्रेणाऽभिहितस्य याथाकाम्यस्य वरीयस्त्वम् अत्राऽऽकलनीयम् । शाकुन्तल इवाऽत्राऽपि शापो नागस्कृतो नित्य-निग्रहायाऽपितून्मार्गात् सन्मार्गे विनिवेशाय कल्प्यते । चतुर्थेऽङ्क उर्वश्या लता-रूपेण परिणतिम् उपपादयितुम् उदयवती-प्रसंगोऽपि कवेर् नाट्य-नैपुण्यम् आविष्करोति ।

तत्रैव पुरूरवसो वाचालताम् उद्भाव्य तन्-मुखेन नाना-रूप-धरा सुषमा-करा प्रकृतिर् उपवर्ण्यते । तेन च वर्णनेन रसिक-जन-मानसे सरसता सञ्चार्यते, नयनाऽभिराम-रामणीयकम् अक्षि-समक्षम् अवतार्यते । संगमनीयमणि-प्रसंगोऽपि कवि-कल्पना-कौशलम् आवेदयति । महेन्द्रस्य शापवशाद् आयुषश् च्यवनाऽऽश्रमे निक्षेपः, पुत्र-दर्शनाऽनन्तरम् उर्वश्याः प्रस्थान-काले पुरूरवसि च वन-गमनाय कृत-निश्चये नारदेनाऽऽनीतम् इन्द्रस्याऽनयोर् यावज्-जीवम् अवियोग-शासनम् इत्यादि-स्थलानि रूपकस्यास्य यथाशास्त्रं सुखान्तत्वम् आपादयन्ति । सामाजिकानां सन्तोषाय च कल्पन्ते । मूलम् आमूलचूलम् अन्यथा कृत्वा कविना नूनम् अस्मिन् रूपके रूप-माधुर्यम् आवेशितम् इति मतिमताम् अत्र मतम् अवसीयते । एवं नानाविधा कथेयं विकासम् उपगता । परं प्रकृतम् अपास्य सूक्ष्मेक्षिकया निरीक्ष्यते चेत् सुनिगूढम् अर्थान्तरम् एवात्र प्रत्यक्षीक्रियते वेद-विद्या-विशारदैः ।

वेदे प्रतिपादितानां देवतानां स्वरूप-निर्धारणविषये विदुषां विद्यते महती विप्रतिपत्तिः । तत्-तद्-देवता-स्वरूप-विषये विद्यमानेयं विचिकित्सा न किलाऽऽधुनिकी परञ्च सुदूरम् अधिरोहति प्राङ्-

१९. विक्र० तृतीय० मिश्रविष्कम्भकः ।

२०. विक्र० तृतीय० मिश्रविष्कम्भः ।

२१. ऋग्वेदः, १०, ९५, ५ ।

नैरुक्तसमयम् अपि । तत्र हि प्राक् प्रवर्तमानानाम् ऐतिहासिकाऽऽध्यात्मिक-याज्ञिक-नैरुक्त-नैदान-प्रभृतीनाम् अनेकेषां वेद-व्याख्यान-मार्गाणाम् उल्लेखः क्रियते यास्काचार्यैः । तत्र किम् इतिहासप्रसिद्धं वा चन्द्र-वंशोत्पन्नम् इहलोके वर्तमानं राजान वाऽऽश्रित्य वैदिक-देवता समुदायाद् एकं द्योतमानं देव-विशिष्टं वाऽवलम्ब्य प्रवर्तते कथासूत्रम् इदम् इति विचारितम् आचार्य-प्रवरैः ।

अनवगत-संस्कारेषु निगमेषूर्वशी-पदं पठद्भिर् यास्काचार्यैर् विस्पष्टम् अङ्गीकृताऽस्य दुरूहता । यदम् इदं व्युत्पादयद्भिस् तैर् उक्तम्—'उर्वश्यप्सरा उर्वभ्यश्नुते ऊरुभ्याम् अश्नुते उरुर्वा वशोऽस्याः'[२२] इति । तत्र भाष्यं कुर्वन्तः स्कन्दस्वामिनस् तु 'उरु महत् स्थानं यशो वा व्याप्नोतीति उर्वशीत्यवगमः । ऊरुभ्याम् अश्नुते सम्भोग-काले कामिनं वशीकरोति शिल्पाचारकुशलेत्यर्थः । ऊर्वशिनीत्यवगमः । उरुर्वा महान् वशः कामोऽस्या महेच्छेत्यर्थः । व्यधिकरणे वा बहुव्रीहिः । बहुषु कामोऽस्याः, बहूनां वा कामो यस्याम् इति उरुवशेत्यवगमः'[२३] इति प्रतिपादयन्ति । उर्वशी-दर्शनान् मित्रा-वरुणयोः स्कन्नाद् रेतसो वसिष्ठजन्माऽभिवादिनी ऋग अत्रोदाहृता—

उतासि मैत्रावरुणो वशिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करेत्वाददन्त ॥[२४]

'हे वसिष्ठ ! उर्वश्याः सकाशान् मनसोऽधिजातो मैत्रावरुणस् त्वम् असि । उर्वशी-दर्शनाद् मित्रा-वरुणयोः रेतः स्कन्नम् । देवानां स्वभूतेन ऋगादि-लक्षणेन ब्रह्मणा विश्वेदेवा अन्तरिक्षे पतितं त्वाम् अधारयन्ते'ति स्कन्दस्वामी । 'मा भूमौ पतेद् इति कुम्भस्योपरि उदकेऽन्तरिक्षे वा त्वाम् अधारयन्ते' ति च दुर्गाऽऽचार्यः ।

मध्यम-स्थाना देवता विद्युद् अप्य् उर्वशीति यास्केनैवाऽग्रे निर्दिष्टम् ।[२५] तत्रोर्वशी-शब्द-निरुक्तिम् 'उर्वभ्यश्नुते' बहूदकं व्याप्नोति, उरुर्वा वशोऽस्याः महान् अस्याः काम उदके' इति व्याख्याति दुर्गाचार्यः ।

मध्यम-देवताऽभिवादिनीयम् ऋग् उदाह्रियते—

विद्युन्न या पतन्ती दविद्योद् भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥[२६] इति ॥

तत्र यास्क इत्थं व्याख्याति—

'विद्युदिव या पतन्ती द्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनम् अयं जायेताऽद्भ्योऽध्यप इति । नर्यो मनुष्यो नृभ्यो हित नरापत्यम् इति वा । सुजातः सुजाततरोऽथोर्वशी प्रवर्द्धयते दीर्घम् आयुः'[२७] इति । स्कन्दस्वामी च 'या विद्युदेव (स्वार्थे न) पतन्ती मम अप्संघातरूपाणि काम्यानि मां प्रति प्रापयन्ती द्योतते तस्याः सकाशाद् अन्तरिक्षस्योपरि सुसम्भृतो नृभ्यो हितश् चोदक-संघात उत्पन्नः । सस्य-निष्पादन-द्वारेणोर्वशी दीर्घम् आयुः प्रवर्द्धयति । 'यस्माद् अन्नमयाः प्राणाः' 'सर्वम

२२. निरुक्तम्. ५, १३ ।
२३. तत्रैव स्कन्दस्वामी ।
२४. ऋग्वेदः, ७, ३३, ११ ।
२५. निरुक्तम्, ११, ३५ ।
२६. ऋग्वेद, १०, ९५, १० ।
२७. निरुक्तम्, ११, ३६ ।

अन्ने प्रतिष्ठम्' इत्येवं व्याख्यानम् अकरोत् । तेनैव तत्रैतिहासिक-पक्षोऽपि व्याख्यातः । प्राग्-उदाहृतायाम् अपि (ऋ० ७, ३३, ११) ऋचि मध्यम-स्थानीय-देवता-परं व्याख्यानम् अपि स्कन्द-स्वामिना कृतम् ।[२८]

कोऽयं पुरूरवा इति जिज्ञासायाम् आचार्यो यास्कस् तं मध्यमस्थानासु देवतासु पठित्वा 'पुरूरवा बहुधा रोरूयते' इति प्रत्यपादयत्[२९] । तत्र 'विज्ञायते हि वायुः (वाताः [देवराजः]) प्राण (प्राणाः[देवराजः]) एव पुरूरवाः' इति ।···अनेक-विधम् अत्यर्थं स्तनयित्नु-लक्षणं शब्दं करोतीति पुरूरवाः' इति स्कन्दस्वामी दुर्गश् च व्याख्यातः । उक्तम् अपि 'पुरुरवा असीति प्राण एव तत्'[३०] इति ।

तस्यैषा ऋग् उदाहृता—

समस्मिञ्जायमान आसत ग्ना उतेमवर्द्धन्नद्यः स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायावर्द्धयन् दस्युहत्याय देवाः ।।[३१]

'हे पुरुरवः ! यदा मेघेन सह महते संग्रामाय दस्युभूतस्य मेघस्य दुर्भिक्षादेर् वा हननाय त्वां माध्यमिका देवा मरुदादयो वर्धयन्ति, तदा अस्मिस् त्वयि जायमाने सम्भूयाऽऽपस्तिष्ठन्ति, 'नद्यः' 'नदना आपः' इति दुर्गः । रश्मयः इति च स्कन्दः । स्वयं-गामिन्यो भूरवैनं वर्धयन्ति इति च स्कन्द-दुर्गयोर् आकूतम्[३२] । स्कन्दस्वामिनैतिहासिक-पक्षोऽपि लक्ष्यीकृत्य व्याख्यातः[३३] । अत्रोक्त-युद्ध-विषये 'अपां च ज्योतिषश् च मिश्रभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति' इति निरुक्तोक्तिर् अनुसन्धेया[३४] । ऋग्वेदश् चाऽत्र प्रमाणम् ।

तद्यथा—

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत् सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से[३५] ।।

देवाऽसुर-युद्धानि मायामात्रम् इति सुस्पष्टम् आदिष्टम् अत्र श्रुतौ । दुर्गाचार्येणाऽस्मिन् विषये 'तस्माद् आहुर् नैतद् अस्ति यद्दैवासुरम्' इत्य् एवं प्रमाणान्तरम् उपन्यस्तम्[३६] ।

तस्माद् उर्वशी विद्युद्, वायुः पुरूरवा इति नित्य-पक्ष-विचक्षणाः । विद्युतः पक्ष-द्वयम् आलक्ष्यते[३७] । चञ्चलालक्षणोदीप्ति-प्रधाना माध्यमिका देवतेति 'विद्युन्न या पतन्ती दविद्योद्, इत्यत्र[३८], 'उर्वशी वा बृहद्दिवा···'[३९] इत्यत्र च सिद्धवत् कृत्वोक्तम् ऋषिणा ।

शब्द-प्रधाना माध्यमिका वाग् इला-शब्द-वाच्या स्तनयित्नु-लक्षणं वात-रूपं पुरूरवसम् उत्पादय-

---

२८. द्र० निरुक्ते ५, १४ स्कन्द-भाष्यम् ।
२९. निरुक्तम् १०, ४६ ।
३०. तु. मै० सं० ३, ९, ५ ।
३१. ऋग्वेदः, १०, ९५, ७ ।
३२. निरुक्तम्, १०, ४७ ।
३३. तत्रैव, १०, ४७ ।
३४. तत्रैव, २, १६ ।
३५. ऋग्० १०, ५४, २
३६. निरु० २, १६ ।
३७. द्र० निरु० ५, १३ स्कन्दस्वामी ।
३८. ऋग० १०, ९५, १० ।
३९. तत्रैव ५, ४१, १९ ।

तीति वेद-वचनैर् अभिधीयते । तथाहि—'अभि न इला यूथस्य माता स्मन्नदीभिर् उर्वशी वा गृणातु' इति ।

अत्र 'यूथस्य' मरुद्-गणस्य 'माता' निर्मात्रीला माध्यमिका वाक् । 'नदीभिः' गङ्गादिभिर् इति सायणः, नदनाभिर् अद्भिर् इति स्कन्दः । 'स्मत् सह नः अभिगृणातु' अभिष्टौतु इति स्कन्दः, अभिस्तनयतु इति च दुर्गः व्याख्याने विशेषः । कीदृशीला ? इत्यत्र 'उर्वशी' 'बह्वाकाश व्यापिनीति' इलाया विशेषणम् इति स्कन्द-स्वामी व्याख्याति 'वा शब्दः समुच्चये'[४०] इति च पठति । तद् एवं माध्यमिकी वाग् इला वात-समूहस्य मातेति स्पष्टम् उदीरयति श्रुतिः । वात-रूपश् च पुरूरवा इति तु प्राङ्निर्दिष्टम् एव । अत इलाया अपत्यं पुमान् ऐलः पुरूरवा इति सिध्यति ।

पुरूरवस उर्वश्याम् आयुर्-आख्यः पुत्रोऽजायतेति पौराणिकी कथा कालिदासाऽऽदिभिर् अनेकैः सूरिभिर् अनुसृतेति तु पूर्वम् उपनिबद्धम् । अस्मिन् विषयेऽपि श्रुतिर् एवाऽनुसन्धेया, साऽपि अपावृणोति निगूढान् भावान् । तद्यथा—'उर्वशी वा बृहद्दिवा गृणानाऽभ्यूर्ण्वाना प्रभृथस्यायोः', शिषक्तु न ऊर्जव्यस्य पुष्टेः'[४१] । अत्र महादीप्तिः शब्दयन्ती प्रकषण सम्भृतस्याऽयनशीलस्य मनुष्यस्य ज्योतिषो वोदकस्य वाऽऽच्छादयन्ती मध्यम-स्थाना विद्युद् अन्नस्य पुष्टये अस्मान् सेवताम् इति स्कन्दो दुर्गश् च[४२] । अयम् आयुश्-शब्दो वेदे मनुष्यः[४३], ऋषि-विशेषः[४४], वायुः[४५], अग्निः[४६], वय[४७] इत्य् अनेकेष्व् अर्थेषु प्रयुज्यमानो दृष्टिपथम् आयाति ।[४८]

'ज्योतिर् उदकं वे'ति यास्कः ।'[४६] उर्वशी-पुरूरवसोर् अथवा विद्युद्-वात-योर् अपत्यम् आयुर् अग्निर् वोदकं वा ज्योतिर् वा भवितुम् अर्हति । एतेषाम् एवाऽत्र सञ्चयो युक्ति-संगतः । मानियर-विलियम-विरचिते संस्कृत-कोषेऽग्निर् एवाऽनयोः पुत्रत्वेन निर्णीतः । किन्त्व् अन्नस्य पुष्ट्यर्थम् उदकम् एवाऽपेक्ष्यते न तु वह्निर् इति कृत्वोदकम् एवाऽत्र समीचीनोऽर्थो न तु वह्निर् इति भूयो विचारार्थम् आधीयते सुधीजन-समक्षम् ।

वैदिक-देवतावादम् अधिकृत्य निरुक्तकारोऽनेकान् पक्षान् उक्त्वा देवता-त्रितय-पक्षं निरुक्ताऽभिमतत्वेन प्रतिपादितवान् । तत्रैक-देवता-वादोऽध्यात्मम् इत्य् अद्वैतवेदान्तमताऽभिमतम् अद्वितीयाऽऽत्म-तत्त्वरूपं परम-ब्रह्मैवैका देवतेत्य् एवं प्रतिपाद्यते । 'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुर्'[५०] इति श्रुतिर् अपि प्रतिपादयति ।

४०. निरु० ११, ४६ ।
४१. ऋग्० ५, ४१, २० ।
४२. निरु० ११, ४६ ।
४३. ऋग्वेदः १, ६०, ३; १, ७, २५; १, १३०, ६ ।
४४. तत्रैव १०, ४६, ४ ।
४५. तत्रैव १, १६२, १ ।
४६. तत्रैव १, १४०, ८ ।
४७. तत्रैव १, ६६, १ ।
४८. नि० ११, ४६ ।
४९. ऋग्वेदः १, १६४, ४६ ।
५०. तत्रैव ७, ४, ८ ।

अनुक्रमणिकाकारेणेदं पक्ष-द्वयं प्रदर्श्यैकदेवता-वाद-प्रतिपादनावसरे 'एकैव देवता महानात्मा स सूर्य इत्याचक्षते' इत्युक्तम्। ऋक्-सर्वाऽनुक्रमणी-कृता शौनकेनैव बृहद्देवताऽपि विरचितेति सम्प्रदाय-विदो वदन्ति। शौनकीये सम्प्रदाये शौनकाद् अनतिदूरे वर्तमानस्याऽन्यस्य कस्यचिद् कृतिर् इयम् इति मैक्डानल-मतम् अत्र विसंवदति। तथाऽपि प्राचीनोऽयं ग्रन्थ इत्यत्र नाऽस्ति सन्देह-लेशोऽपीति कृत्वा दवतः-विषये परम्परा-प्राप्तम् अत्रोद्धृतं मतं प्रामाणिकम् इति निश्चीयते। तत्र सूर्य एवैका देवतेति पक्ष-प्रतिपादनम् एभिर वचनैः कृतम्—

भवद् भूतस्य भव्यस्य जङ्गम-स्थावरस्य च।
अस्यैके सूर्यमेवैकम्प्रभवम्प्रलयं विदुः॥
असतश्चैव सतश्चैव योनिरेषा प्रजापतिः।
यदक्षरञ्च वाच्यञ्च यथैतद् ब्रह्मशाश्वतम॥

कृत्वैष हि त्रिधात्मानमेषु लोकेसु तिष्ठति।
देवान् यथायथं सर्वान् निवेश्य स्वेषु रश्मिषु॥
एतद् भूतेषु लोकेष्वग्निभूतं स्थितं त्रिधा।
ऋषयो गीर्भिरचंन्ति व्यञ्जितं नामभिस्त्रिभि.[५१]॥

एनम् एव पक्षम् अङ्गीकृत्योषसम् एवोर्वशीं मन्यमानैर् मैक्समूलरमहोदयैर् 'उर्विया विभाति'[५२] 'उर्विया विचक्षे'[५३] 'वरीयसी' इत्यादीनि विशेषणान्य् उषसो व्यापकत्वम् एव सङ्गिरन्त इति साग्रहम् अनुरुध्यते। उरून् बहून् अश्नुते इत्य् उर्वशी-शब्दस्य व्युत्पत्तिर् अपि उषसम् एव निर्दिशति। उरून् अञ्चति गच्छतीत्य् उषोवाची उरूची-शब्दोऽपि तम् एवाऽर्थम् उद्भावयति। यावनी-भाषायाः 'eurn' शब्दोऽप्य् उरु-शब्देन संवदति। 'Euryphesse', 'Eurykyde' 'Eurypyle' इत्यादयः शब्दा यावने पुराण-शास्त्रे नानाख्यानोपाख्यानेषूषसम् एवान्ततो व्यञ्जयन्ति। एतेषु विद्यमानः 'eur' इति पदांशोऽपि 'उरु'-पदेन संवदति। ऋग्वेदोक्ताख्याने पुरूरवा आत्मानं वसिष्ठ-शब्देनाऽऽख्याति। 'अन्तरिक्षप्रां रजो विमानीमुपशिक्षाम्युर्वशीं वसिष्ठः'[५४] इत्यत्र वसुमत्तमो दीप्तिमत्तमो वसिष्ठ इति व्युत्पत्त्या वसिष्ठ-शब्दः सूर्यस्य पर्यायः। अन्यत्र सूर्य उषसं कामयमानस् ताम् अनुदिवसम् अनुसरन्न् अप्य् अनासाद्य विरह-व्यथोन्मथित इव क्षीणतां यातीति पुराण-विजृम्भितोक्तिर् युक्तैव। 'सूर्यो देवीमुषसं रोचमानां मर्यो न योषाम् अभ्येति पश्चात्'।[५५] दिवसाऽवसाने पश्चिमायां दिशि पुष्करम् अवगाहमानाम् उषसम् उद्वीक्षते सूर्यः किन्तु ताम् अनासाद्य हताशो हतप्रभ इव गृहम् अभिनिवर्तते, अस्तम् एति।

५१. बृहद्देवता १, २६१-१६३।
५२. ऋग्वेदः, १, ९२, ९।
५३. तत्रैव, १, ११३, ५।
५४. तत्रैव, १०, ९५, १७।
५५. तत्रैव, १, ११५, २।

सूयार्थं प्रयुज्यमानम् अन्तरिक्षप्रेतिविशेषणम् उर्वश्यर्थम् अपि प्रयुज्यत इति दृष्ट-पूर्वम् 'बृहद्दिवा' इति विशेषणम् अपि उषसम् एवाऽऽख्याति दीप्तियुक्तत्वाद् व्यापकत्वाच् च। उपोदे बीजगति-तले वर्तमानस्य प्राणिजातस्याऽऽयुर् वर्धयतीति 'अस्मे श्रेष्ठेभिर्भानुभिर्विभाह्युषो देवि प्रतिरन्ती न आयुः'[५६] इत्यादिनाऽवगम्यते। उर्वश्य् अपि प्राणिनाम् आयुर्-वर्धनाय कल्पत इत्य् अपि 'उर्वशी प्रतिरत दीर्घमायुः'[५७] इत्यादि-वेद-वचनैर् अनुमोद्यते। अतः सूर्य एव पुरूरवा उषा एवोर्वशीति मैक्समूलर-महोदयानां निर्बन्धः।[५८]

अस्मिन् पक्षे सूर्यस्यैलत्वम् अधुना प्रमाणीक्रियते। अग्निर् इलायाः पुत्र इति संहितायाम् एवाऽऽम्नायते। तद्यथा—

**'अरुषस्तूपो रुशदस्य पाज इलायास्पुत्रो वयुनेऽजनिष्ट'।[५९]**

अस्याऽग्नेर् बलं तेजःसमूहो दीप्तियुक्तोऽभूत्। आरोचमान-तेजः-संघोपेत 'इलाया' उषसः पुत्रोऽग्निर् 'वयुने' प्रकाशे प्रज्ञाने वाऽजायत इत्यर्थः। 'वयुनं' वेतेः कान्तिर् वा प्रज्ञा वेति' यास्कः।[६०] प्रातःकाल उषस आविर्भावाऽनन्तरम् अग्नेर उत्पत्तिम् अत्र द्रढयति श्रुतिः।

अग्नि-सूर्ययोर् अभेदोऽपि 'स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते'[६१] इति वदता यास्केनाऽभ्युपगतः, अपि च 'इमम् एवाऽग्निम् आत्मानम् एकम् आत्मानं बहुधा मेधाविनो वदन्ति'[६२], इति एकं सद् विप्रा बहुधा वदन्ति' इति च मन्त्र-व्याख्याने अग्नेर् एवैकात्मत्वं प्रतिपादयन् 'सूर्य आत्मा जगतस्तस्थुषश्च'[६३] इत्यत्र सूर्यस्य जगदात्मत्वम् आपादयन्तीं श्रुतिम् अनुवदति नैरुक्तः। प्रभातायां रजन्याम् आयातायाम् उषसि यज्ञियोऽग्निः प्रज्वाल्यते, अनेनाऽग्निना साकम् एवाऽग्ने रूपान्तरम् आदित्योऽप्य् आविर्भवति। तथाहि—

**उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत्।**
**देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत् प्र चतुष्पदित्यै ॥[६४] इति।**

अग्नि-सूर्ययोश् चाऽभेदः, तेनैव च सूर्य इवाऽग्निर अप्य् उषसं कामयते। प्रमाणत्वेन 'शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची, दिवो न ज्योतिः'[६५] इति ऋग् उपस्थापयितुं शक्या।

अत ऐलोऽयम् आदित्यो न पुरूरवसो व्यतिरिक्तः कश्चिद् अन्योऽस्ति। उषा एव इला-पद-वाच्येत्यपि श्रुति-प्रतिपादित एवाऽर्थः प्रतिभाति। आदित्यश् च नूनम् आयुषः सर्वेषां वयसः कारणम् इत्यत्र न कश्चित् सन्देहाऽवसरः। सूर्यम् एवैकं देवम् अभ्युपगच्छताम् इत्य् अत्र विषये इयम् एव सरणिर् इत्यलम अति-विस्तरेण।

---

५६. तत्रैव, ७, ७७, ५।
५७. तत्रैव, १०, ६५, १०।
५८. चिप्स फ्रॉम ए जर्मन वर्कशॉप, भा ४ पृ० १०७ तः।
५९. ऋग्वेदः, ३, २९, ३।
६०. निरुक्तम्, ५, १५।
६१. तत्रैव, ७, १७।
६२. तत्रैव, ७, १८।
६३. ऋग्वेदः, १, ११४, १।
६४. तत्रैव, १, १२४, १।
६५. तत्रैव, १, ६६, १।

## संस्कृतेः संकटम्

संस्कृत-शब्दस्य को नाम वाच्यार्थं, कोऽभिप्रायः, किम् आकूतम् इत्यत्र सन्ति तावद् विदुषां विप्रतिपत्तयः। परम्परातः प्राप्ता आचारविचाराः, लोक-व्यवहाराः, आध्यात्मिकाऽनुभूतयः सांसारिक समस्या-समाधान-प्रकाराः, शिक्षा-दीक्षादि-विधयः काव्य-संगीत-कला-कलापादर्शाः, सत्य दया-दाक्षिण्या-दिगुण-ग्रामाः, आर्थिक सामाजिक-राजनैतिकनीति-रीतयः सर्वम् इदं संस्कृति-पदवाच्यम् इत्यत्र प्रायेण समेषाम् ऐकमत्यं विद्यते, स्वल्प एव विसंवादः समापतति।

मा भूद् भारतीया संस्कृतिः संसारे कामं सर्व-प्राचीना, पुराणतम-संस्कृतिष्व् अन्यतमा त्व् अवश्यम् अस्ति। मिश्र-बाबुल-प्रभृति-प्राचीन-देशानां संस्कृतयस् तु कालेन कवलिता नाम-शेषतां गताः, किन्तु भारतीया संस्कृतिर् अद्यापि स्वकीयां पुरातन-श्रियम् आश्रित्यापि नूतन-परिधानम् आदधाना सर्वत्र समादरम् आप्नोति, प्रशस्यते च। विज्ञान-प्रधानेऽस्मिन् युगे पृथिवी-पृथुलता सङ्कोचम् आगता, विप्रकर्षः प्रतिदिनं विलुप्यते, देश-गतम् अन्तरम् अन्तम् आयाति। सुदूरस्था अपि जना द्रुत-गतिभिर् वायुयानैः स्वल्पनैव समयेन सन्निकर्षम् अनुभवन्ति। सन्निकर्ष-जन्य-सङ्घर्ष-वशात् सर्वोऽपि लोकः स्वकीयान् परम्परा-प्राप्तान् आचार-विचारान् विहाय परकीयान् व्यवहारान् अंगीकृत्य सङ्कर-संस्कृतिम् उत्पादयितुम् ईहते। अतोऽद्य न काऽपि संस्कृतिः स्वकीयेन विशुद्धेन रूपेण अवस्थातुं शक्नोति। तथापि सुसमृद्धाः, शक्ति-सम्पन्नाः प्रभाव-शालिनो देशाः स्वकीयां संस्कृतिम् अन्येषु विपन्नेषु क्षीण-शक्तिष्व् अधमर्णेषु देशेषु समारोपयितुम् ईहन्ते, 'सर्वे गुणाः काञ्चनमाश्रयन्ते' इति लोकोक्त्यनुरोधात् सर्वे निर्धना निर्बलाश् च हीन-भावनाऽऽक्रान्त-हृदया लोकाः स्वकीयं सर्वं हीनतरं क्षीण-प्रभावं च मान्यमानाः परकीयां नव-यौवन-सम्पन्नां नव-परिधानावृतां, नव-वयः-समुचित-केलि-कल्लोल-रतां चञ्चल-स्वभावां, मनोहराम् उत्प्रेक्ष्य कामुका इव वयः-परिणाम-परिपक्व-स्वभावां, प्रौढां, सुस्थिरां, गम्भीर-प्रकृतिम् अपि स्वकीयां संस्कृतिं परित्यजन्ति। परिणामतः पाश्चात्या संस्कृतिर् अन्याः सर्वाः परिभूय सर्वत्र समुज्जृम्भते। सङ्कर-जातिर् इव सङ्कर-संस्कृतिर् अपि उभय-पक्ष-गत-दोष-दुषिता स्वीकर्तुः कल्मषाय कल्पते, क्लेशाय सम्पद्यते। स खलु धावद्-अश्व-द्वयारूढोऽपटुर् इव नूनं विपत्तिम् एति। सप्रतिघातम् अधोमुखः पतति। संस्कृति-द्वय सङ्क्रान्ति-काले स्वगत-संतुलनं स्थिरीकर्तुम् असमर्थः किङ्कर्तव्य विमूढः सन् कर्तव्याकर्तव्यम् अजानानो जनः पापीयान् भवति, सर्वमान्यान् नियमान् उल्लङ्घते, भ्रष्टम् आचरति, सर्वत्र उपद्रवान् जनयति, उच्छृंखलतां प्रतिपद्यते। नव-संस्कार-जन्य-चाक-चक्यवशात् सञ्जात-दृष्टिदोषो वस्तुस्थितिम् अवलोक-यितुम् अक्षम उत्पथम् अवलम्बते। ईदृशी दुरवस्था शिक्षितेषु विशेषतोऽर्धशिक्षितेषु तेषु भारतीयेष्व् अपि दरीदृश्यते ये खलु विच्छिन्न-परम्पराः पाश्चात्याऽऽचार-व्यवहारस्य बाह्यरूपेणाऽऽकृष्यमाणाः पाश्चात्या-नाम् उन्नतेर् मूल कारणं गुण-गरिमाणम् अनुद्वीक्ष्य तेषां सामाजिक-संघटनं नैतिक-परम्परां चोपेक्ष्यैव तान् अनुकुर्वन्ति, 'इतो नष्टास् ततो भ्रष्टाः' इति लोकोक्तिम् अनुरुध्य तेषां दूषणान्य् एव स्वीकुर्वन्ति।

भारतीय-नियम-संयम-बन्धनानि परित्यज्य पाश्चात्य-नियमान् अस्वीकृत्य च त्यक्त-सर्वप्रतिबन्धाः स्वल्प-विद्या-गर्वदर्पितास् ते सामाजिक-नियमान् उल्लंङ्घ्य परम्पराम् उद्भज्य गुरुवचनम् अनादृत्य स्वैरिताम् अवलम्ब्य पैशाचिकम् आह्लादम् अनुभवन्ति । 'न खलु वयं नवीनाः पुरातन-परिपाटिषु विश्वसिमः, सर्वं पुरातनं समय-प्रतिकूलत्वाद् हेयं, सर्वं नवीनम् अनुकूलत्वाद् ग्राह्यं' चेति सन्ति तेषां कुतर्कोक्तयः । विचित्रा खलु मदान्धता आवृणोति तेषां मनांसि, सुदुर्बोधा बालिशता जडीकरोति तेषां चित्त-चेतनाम् । इदम् एव महद् संस्कृति-सङ्कटम् अद्योत्तिष्ठति राष्ट्र-सम्मुखे, किन्तु न कोऽपि दानवम् इव एनम् उद्वीक्षमाणः प्रतिभाति । पश्यन्न् अपि वा गज-निमीलितम् इवाऽऽचरन्न् उपेक्षते । किन्तु न कोऽपि तस्य गम्भीर्यम् अनुभवति ।

प्रथमतस् तेषां नव-संस्कृतानां व्यवहारः समाजम् अवहेल्य व्यक्तिगत-महत्त्वम् उद्भावयति । व्यक्ति-गत-महत्त्व भावना मनुष्ये उद्दाम-दर्पम् उपजनयति । अविनयम् उत्पादयति । विद्यायाः प्रथम फलं विनयं परिगणयति विचक्षणगणः । प्राचीनेषु भारतीयेषु विनीत-भावना प्राचुर्येण विराजमाना दृश्यते सर्वत्र समाजे । सामाजिकोऽयं गुणः परस्परं सौहार्दं सहानुभूतिं, समादरं च जनयति ।

विनयशीलो न कस्य हृदयम् आवर्जयति ? न कस्य मैत्रीम् उपजनयति ? न कस्य सद्भावना उद्भावयति ? अयम् एव सामाजिकः सद्गुणोऽद्य विलुप्यते । अनेन सहैव अस्य परिणाम-भूतो गुण-ग्रामोऽपि-शनैः शनैर् अदर्शनं याति । शुष्के स्रोतसि प्रवाहः कथं न क्षीयेत । अत एव भारतीयानां नवीना सन्ततिः सर्वत्र अविनय-शीलताम् उद्दण्डताम् च आविर्भावयति । प्रशासनिक-कार्यालयेषु कर्मचारिणां जनतया व्यवहारे दुर्गुणोऽयं विशेष-रूपेण प्रकटीभवति । हीन हीनोऽपि प्रशासन-कर्मचारी कार्यार्थिभिस् तथा उद्धतम् अविनीतं च व्यवहरति यथा कश्चिद् दण्ड-नायकोऽपराधिषु साधिक्षेपम्- आत्म-प्रभावं प्रतिष्ठापयितुम् उद्युङ्क्ते । विदेशीयैर् अस्योदीयमानस्य दुर्गुणस्य यत्र तत्र पत्रेषु भर्त्सनाऽपि क्रियते । विद्यालयेषु विद्यार्थिनो गुरुष्व् अविनयम् आचरन्ति, गृहेषु पुत्राः पितृषु धृष्टं व्यवहरन्ति । शिल्प-शालासु कर्म-कराः प्रबन्धकेषु, विपणिषु वणिजो ग्राहकेषु, यात्रासु यान-कर्मचारिणो यात्रिषु, यात्रिणो यात्रिकान्तरेषु, स्वामिनो भृत्येषु, भृत्याश् चाऽधुना स्वामिषु तथा व्यवहरन्ति यथा सर्वत्र पारस्परिक-विद्वेषो विराजते, सर्वत्र दुर्भावनोद्भिद्यते । समाजे सर्वत्र परस्परम् अविश्वासः, शिष्टताया अभावश् च परिलक्ष्यते ।

शिष्टाचारस्य ह्रासोऽयम् अन्यत्रापि स्व-प्रभावम् उपदर्शयति । अस्मद्देशे नारी सामाजिकानाम् आदरम् आदित एव अलभत । तस्या अनादरम् असहमानाः सहस्रशो युवानः स्व-प्राण-पणैर् अपि अपराधिनं दण्डयितुम् अयतन्त । रामायणे महाभारते चेदं प्रयाणीक्रियते । नारी-सतीत्व-रक्षार्थम् स्त्री-सम्मानं परिपालनार्थं सदैव भारतीयाः सन्नद्धा अभूवन् । रक्त-नदीर् अपि प्रवाह्य नार्या अपमानं प्रतिशोध्यैवाऽनेके भारतीया निर्वृत्तिं लेभिर इति सुविदितं विद्यावताम् । किन्त्व् अद्य शिक्षितम्मन्यैर् युवजनैश् चतुष्पथेषु सर्वजन-समक्षम् अपमान्यमानाम् न कश्चिद् अपि त्रातुम् उत्तिष्ठते, न कस्याऽपि बाहुः परिस्पन्दते, न कस्याऽपि मर्माहतं हृदयं खण्डशः परिस्फुटति । सर्वो जनो विचित्राम् एकाम् अनिर्वचनीयाम् उदासीनताम्

आस्थाय पुरतः प्रवर्तमानम् अनाचारं पश्यन्न् अपि न पश्यति । सर्वोऽयं विशालो देशः शनैः-शनैः षण्ढ-वसतौ परिवर्त्यमानः प्रतीयते । यत्र गात्र-सञ्चालन-पुरःसरं नृत्य-संगीतादिकं तु दिवारात्रं चलति किन्तु पौरुषोचितं कर्म क्रियमाणं न दृश्यते । कदा न खलु राक्षसत्रासिताः सीताः समुद्धर्तुं पुनर् अपि रामोऽवतरिष्यति, कदा नु खलु दुःशासन-सहस्र-समुत्पीडिता द्रौपदीः परित्रातुं भुज-दण्डाव् आस्फाल्य भीमः समुत्थास्यति । पाश्चात्येष्व् अद्य नारी सर्वत्र सम्मान्यते । तत्र नारीषु क्रियमाणा अपराधास् तीव्रां प्रति-क्रियां जनयन्ति जनहृदये ।

पाश्चात्य-प्रभावाऽभिभूता भौतिक-भावनाऽऽक्रान्त-हृदया अवधीरिताऽध्यात्म-विचारा येन केन विधिना धनोपार्जनैक-लक्ष्याः पाप-पुण्य-सत्यानृतविचार-विहीना धर्मं पाषण्ड इति, पापं कपोल-कल्पितम् इति, पुण्यं धूर्तस्वार्थसाधन-संकल्प इति कर्त्तव्याऽकर्त्तव्य-विचारो लौकिक-साफल्याऽसाफल्याऽधीन इति मन्यमानाः सर्व-विधम् अनाचारं निःशकं निष्प्रत्यूहं च कुर्वन्तोऽपि समाजे धनाढ्यता-वशात् सम्मान-भाजनतां यान्ति । भ्रष्टम् आचरन्तोऽपि नेतारो भवन्ति । शासन-तन्त्रम् आत्मसात्-कृत्य सर्व-प्रकारम् अत्याचारम् आतिष्ठन्ति । एतैर् 'महाजनैर्' निर्मितेन मार्गेण अन्ये प्राकृतजना अपि सञ्चरन्ति । तेऽपि भ्रष्टाचारम् आश्रित्य समाज-हित-विरुद्धां स्वार्थ-साधन-प्रवृतिं परिपुष्णन्ति । केवलं धर्म-परायणा जनता कष्टम् आपद्यते । अस्मिन् विषये भौतिक-वादिनाम् अपि पाश्चात्यानां व्यवहारोऽत्युत्कृष्टो भवति । तेषां भारतीय-सामाजिक-दायित्व-भावना सर्वोपरि वर्तमाना तेषाम् आचरणं सन्मार्गे अभिनिवेशयति । अस्याम् अवस्थायां शिष्याणां मनसि विराजमाना सर्व-दायित्व-शून्यता नूनम् अनर्थ-करी सम्पद्यते । आधुनिक-भारतीया अधिकाराणां प्राप्त्यर्थं कर्ण-स्फोटकं क्रन्दनं कुर्वन्ति, कर्तव्यस्य चर्चाम् अपि न कुर्वन्ति । कर्तव्यस्येयम् अवहेलना राष्ट्रस्या-कर्त्तव्याऽधिकारयोर् विवेकस् तु दूरस्थः, कर्तव्य-चिन्ताऽपि परिहीयते । ऽधो-गतये सम्पत्स्यते । कर्त्तव्य-भावना-विहीनाः स्वकीयाम् एव समृद्धिं पुरस्कृत्य प्रवर्तमाना जना राष्ट्र-हिताय कल्प्स्यन्त इति दुराशामात्रम् एवास्ति । किन्तु राष्ट्र-हित-विरुद्धम् उच्छृखलं कार्य-जातं कियन्तं कालं व्यक्ति-गतं स्वार्थं साधयिष्यतीति न विभाव्यते विवेक-शून्येन स्वार्थि-समुदायेन । अन्ते तु विपद्-ग्रस्तेन राष्ट्रेण सह तेऽपि विनाशम् एष्यन्तीति स्वतः सिद्धो राद्धान्तः ।

राष्ट्र-हितं परिहृत्य स्वार्थ-साधने संलग्नो व्यापारि-वर्गो यथेच्छं मूल्य-वृद्धिं कृत्वा स्वीयं कोषं प्रपूर्य दारिद्र्योपहृतां जनतां क्षुत्क्षामकण्ठाम् अपि, मरणाऽऽसन्नाम् अपि क्षुत्पीडित-जठराम् अतिद्रुत-गत्या-कवलताम् आनयति वा धनपति-परिपन्थिनः साम्यवादिनो निमन्त्रयते वा । एवम् एव उत्कोच-हारिणः शासन-कारिणेऽपि स्वकीयम् उदरं संभृत्य असहायाम् अशिक्षितां च जनतां क्लिश्नन्ति, अवमन्यन्ते निर्भर्त्सयन्ति च । असन्तोषः प्रतिदिनं वर्धते, विधि-व्यवस्था क्षीयते, शासने विश्वासो विनश्यति । शासन-विरुद्धोऽयं ज्वालामुखी कदा विस्फोटम् एष्यतीति को नु जानाति । अप्रतिहत-गतिर् इयं स्वार्थ-साधने-च्छैवाऽत्र निदानम् । अत्युत्कटा धन-लिप्सा सदा राष्ट्रस्य विनाशाय कल्पते । योरुपीया अपि धनम् अर्जयन्ति, किन्तु तेषु वाटसन्-सदृशानां स्वार्थोत्सर्गिणां देश-भक्तानाम् अभावो नास्ति ये निज-हितम् अधरीकृत्य राष्ट्र-हितम् उन्नयन्ति । भारते वर्षे तादृशानाम् आत्मोत्सर्गिणां क्षीण-क्षीणापि संख्या

प्रतिदिनं क्षीयतेतराम् । इदम् एवाऽस्ति द्वयोः संस्कृतोर् मध्ये महद् अन्तरम् । अत एव ते प्रतिदिनम् उन्नति-पथम् आरोहन्ति, एते तु विगत-विंशति-वर्षेषु यथापूर्वम् एवावस्थिताः । केवलं केचिद् धनाढ्या आढ्यतरा जाताः, निर्धनास् तु निर्धनतराः ।

उद्दान्तोद्दण्डान् विनेतुम् ईश्वर-भयं समाज-भयं राज-भयं वा प्रभवति । केचिद् एवं शिष्टाः स्वयम् आत्मानं नियन्तुं यतन्ते । यत्र त्रिविधम् इदं भयं विलुप्यते तत्र साहसिकानां पाटच्चराणां च महोत्सवो भवति । भारते वर्षे त्रिविधम् अपि भयं सर्वत्र प्रवर्तमानम् आसीत् । अधुनातनेषु भौतिक-वादिष्व् ईश्वर-भयं तु न पदम् अपि कर्तुं शक्नोति, समाजस्य जर्जरतया उपक्षीणा नियन्त्रण-शक्तिः । मूर्ख-मताऽधीनं प्रजातन्त्रं न जातु उद्दण्डान् दण्डयितुम् उद्युङ्क्ते, यतो मतदानाऽवसरे त एव स्व-प्रभावेण पद-प्रत्याशिनः साहाय्यं सम्पादयन्ति । अतो नियन्त्रण-शून्यम् असंयतं निरस्ताऽनुशासनं राष्ट्रम् अधोगतिं प्रतिपद्यते चेत् किम् अत्राऽऽश्चर्यम् । सर्वविध-दायित्व-हीनैर् आन्दोलन-कारिभी राजनैतिक-नेतृभिः समाजे वर्धमानोऽम् असन्तोषो वर्तमानं वैषम्यं च स्वहस्त-गता पाञ्चालिकेवस्वार्थ-सिद्धये प्रयोक्ष्यते । स्वार्थ-सिद्धिर् इयम् अनवरतम् आन्दोलनम् अपेक्षते । अनियन्त्रितान्य् आन्दोलनानि कर्तव्याऽकर्तव्य-विवेक-बुद्धिम् अवसादयन्ति । अवसन्न-बुद्धिर् जन-समूहो राष्ट्रस्य सर्वविधावसादाय सम्पद्यते । अयम् एव अवसादो भारतस्य राष्ट्रिय-धमनिषु द्रुत-गत्या प्रसरति ।

चतुर्वर्गे धर्मानन्तरं परिगण्यमानोऽर्थः सर्वथा धर्मानुकूलो यदि स्यात् तर्हि श्रेयस्करो भवति, अन्यथाऽनर्थाय कल्पते । धर्म-प्रतिकूलैर् उपायैर् उपार्जितं धनम् अभिशस्तं परिहार्यं च भवति । नैकविधानि दूषणान्य् अप्रशस्तेन धनेनैव जायन्ते । पूर्वम् अपि धनिक-वर्गेण विधिनानि व्यसनानि सेव्यमानानि न्याय्ये पदे समारोपितानि । अद्यत्वे तु स्वयं-कृतस्य पापस्यौचित्यम् उच्चैर् उद्घोष्यते । गर्हितम् अपि कर्म चत्वरे निस्त्रपं कृत्वा धनिकाः सम्मानं लभन्ते । पाप-कर्म-कौलेन प्रख्यायन्ते । सम्मानिता अपि प्रकट-रूपेण धर्म-परायणा अपि व्यापारे व्यवहारे च सवत्र अनृतं, धूर्ततां, प्रवञ्चनां, वचनापलापं, कपटतां, व्यलीकतादिकं सर्वं वाणिज्यकर्मणि न्याय्यम् इति प्रतिपादयन्तो न जिह्रियति । कर-चौर्यम्, मूल्य-वर्धनम् अनुचितो लाभः, अवतोलनम्, अधिलाभ इत्यादि-दूषणानि भारतीये वाणिज्य-क्षेत्रे चिराद् रिक्थ-रूपेणाऽधिगतानि, तथापि तेषाम् औचित्यम् अद्यैव समाजे प्रतिष्ठाप्यते । चौर-व्यापारो दिनस्य प्रकाशे व्यक्त-रूपेण अनिबाधं क्रियते । पर-प्रवञ्चना-प्रवृत्तिः पराकाष्ठां गतेति कृत्वा विदेशीयाः साधारणेषु भारतीय-वणिजां प्रभावेणाऽस्मिन् देशे क्रियते । स्वकीये देशे तेऽन्यथा व्यवहरन्ति तत्र ते सत्पथम् आचरन्ति । अस्मद्-राष्ट्रस्य प्रतिमूर्तिर् एभिर् विदेशेषु स्वार्थ-परतया कलङ्क्यते इति महतः शोकस्य विषयः ।

पाश्चात्य-प्रभावेण विस्मृताऽऽत्मानो निरस्त-समस्त-संयम नियमः युवानः प्रायेण समाजे सर्वत्राऽनाचारम् अपि प्रचारयन्ति । तेषां नवचेतनादर्शने परस्त्री-स्पर्शाऽभिमर्शयोः न कोऽपि दोषो भवति । 'रतिर् नाम सर्वथा स्वाभाविको व्यापारोऽतो यौन-वासना-संयमनं न केवलम् अप्राकृतं कर्म, अपि तु स्वास्थ्य-हानिकरम् अपि भवति । को नाम कामस्योद्दामप्रवाहं नियन्तुं निवारयितुं वा प्रभवति । विश्वामित्र एवाऽत्र निदर्श-

नम्' इति कानिचिद् अपवाद-भूतान्य् उदाहरणान्य् उत्सर्ग-रूपेण स्वीकुर्वाणास् ते कामुकतायाः प्रचार प्रसारञ् च न्याय्यं मन्यमानाः समाजे नवीनता-व्याजेनाऽनाचारं विस्तारयन्ति। योजनाबद्धम् इदं कार्य-जातम् उच्च-वर्गे प्रचलति। क्वचिद्-नृत्य-संगीत-संवर्धन-व्याजेन क्वचित् सौन्दर्य-प्रतियोगिता-व्यपदेशेनैते काम-वासनाः पूरयितुं विविधाः सभाः संस्थाश् च सञ्चालयन्ति। विश्व-सुन्दरी-समारोहेषु यावद् धनम एते नारी-सौन्दर्य-विशेषज्ञा अपव्ययन्ति तस्य सहस्रांशम् अपि जन-हित-कार्येषु उपयोक्तुम् उद्यता न भवन्ति। नाऽपि सौन्दर्यप्रियास् ते मलिन-मलिनानाम् अवस्करपूर्णानां निर्धन-वसतीनां किट्टं कर्दमञ् च प्रमार्ष्टुम् एकां काकिणीम् अपि दातुम् ईहन्ते।

अस्मिन् विषये चल-चित्रेषु प्रदर्शिता अनियन्त्रिताः प्रणय-भावा असंयताः काम-केलयोऽश्लीलं गानञ् च साहाय्यं कुर्वन्ति। तत्र दृष्ट-श्रुतञ् च सर्वं जीवन-रंग-शालायाम् अपि नाटयितुम् ईहमानास् ते विद्यालयेषु सङ्कर-सभासु च नव-यौवन-सम्पन्नाभिर् विविध-वेष-भूषावृताभिर् अर्धनग्नाभिश् च आधुनिकाभिर् हास्य-विनोद-बहुलानि नृत्य-संगीतकान्य् आयोज्य अन्तर्निगूढाः काम-वासना समुद्दीप्य अभिसार-कर्मसु परस्परं प्रवर्तयन्ति। किन्तु परिणममानेषु तत्फलेषु किम् अपि दायित्वम् अस्वीकुर्वाणा कापुरुषा प्रायेण विवाह-प्रस्तावं प्रत्याख्याय नारी-जीवनं लोकापवाद-दहने दग्धुं परित्यज्य मृगयान्तरम् अन्वेष्टुम् आरभन्ते। स्वकीयकलमषं प्रक्षालयितुम् ईहमानास् ते भ्रूण-हत्याम् अपि न्यायसंगतां प्रतिपादयन्ति। यद्यपि पुराकालेऽपि निभृतं निगूढञ् च व्यभिचार-कर्म प्रावर्तत तथाऽपि पापस्य न्याय्यत्व-प्रतिपादने न केनापि यत्नः कृतः प्रतीयते। अद्य तु पापं पापम् एव न मन्यते आंग्लेष्व् अपि अभिजातः शिष्ट-सम्प्रदायोऽस्मिन् विषये समुचितां मर्यादां परिपालयति किन्त्व् अर्ध-योरुपीया भारतीयास् 'त्यक्तलज्जः सुखी भवेद्' इति लोकोक्तिम् अनुसरन्तो वृद्ध-जन-समक्षम् अपि अनर्गलं प्रलपन्ति।

वृद्धानाम् आयुर् एव सम्मानम् आवहति इत्य् अस्ति भारतीयः शिष्टाचारः। किन्तु पश्यामो वयम् अनुदिनं यद् युवानो वृद्धान् उपहसन्ति गुरून् अवजानन्ति, अभिवादनार्हान् तिरस्कुर्वन्ति। उन्मार्ग-गमिनस् तान् उपदिशन्तो गुरवो 'जानीमो' वयम् आत्म-हिताहिते, अलम् अतिप्रलापेनेति साधिक्षेपम् अवधीर्य निर्भर्त्स्यन्ते। वार्धके तिरस्कृतास् ते वराकास् तूष्णीम् आसते। 'अस्माकम् अपि जठरं न भ्रियते कथम् एतान् जरठान् वयं पालयामः' इत्युदरम्भरयस् ते पितराव अपि वार्धके परास्यन्ति। 'वृद्धजनपालनं प्रशासनेन कर्तव्यम्' इत्यस्ति तेषाम् आकूतम् किन्तु पाश्चात्येषु देशेषु प्रशासनपरिपालिता वृद्धा कीदृशं नारकीयं जीवनं यापयन्तीति त ज्ञायत एभिः।

पाश्चात्य-संस्कृतेः कलङ्कभूतं दूषणं सुरापानम् अस्मत्-समाजे द्रुतगत्या वर्धते। पुरुषातिरिक्ता आधुनिका नार्योऽपि व्यसनम् एतत् प्रतिपद्य आत्मानम् अभिजात-कुलान्तर्गतम् अभिमन्यन्ते। भारतीया संस्कृतिः सुरापानं महा-पातकेषु गणयति। किन्तु कीदृशो दैवदुर्विपाकोऽयं यत् तदेव दूषणम् अद्य तथा-कथिते 'उच्च-समासे' मुख-भूषणं संवृत्तम्। मद्यप-बहुले तस्मिन् समाजे निवृत्त-मद्यः सात्त्विको जनो विचित्राम् अनिर्वचनीयाम् उपेक्षाम् अनुभवति। प्रशासक-वर्गे मद्यप-समुदायस्य प्रबलत्वाद् एव कृत-

प्रयत्ना अपि केचित् सात्त्विकाः संसत्सदस्या मद्यपान-निरोधकं विधेयकं संसदि पारयितुम् असमर्था अभूवन् ।

मन्त्रि-वर्गस्याऽपि व्यसनेऽस्मिन्न् आकण्ठ-मग्नत्वाद् गान्धि-वादिभिर् आपाद-मस्तकं बलं प्रयुज्यापि मद्य-निषेध-विषये न मनाग् अपि सफलताऽधिगता । यद् दुर्व्यसनं देशाद् दूरीकर्तुं राष्ट्रपिता गान्धी सत्याग्रहं कृत्वा विदेशीयानां कारागारं वर्षाणि यावद् यातनाः सोढ्वाऽपि सर्व-सन्धि-वार्ताः सपाद-प्रहारं परिहृत्याऽत्याचारिणो देशाद् निरस्य राम-राज्य-स्थापनार्थम् अयतत. यद् दुर्-व्यसनं देशान् निरसितुं परः सहस्रा भारतीया विदेशीयसाम्राज्य-विरुद्धं प्राणपणैर् अभियुध्य पञ्चत्वं गतास् तदेव दुर्व्यसनम् अद्य परिपोषयितुम् अस्माकम् एव प्रशासनं देशे मद्यनिषेधान्दोलनम् असफल आपाद-मस्तकं यतते इति नूनम् आश्चर्यवहन् । भारतीयानां स्वाराज्य-सेनाभटानां राम-राज्यस्येदृशी कल्पना कदाऽपि नाऽऽसीत् । पूर्वोक्तम् अस्माकं मनोवाक्-कार्येष्व् असामञ्जस्यम् अत्र प्रमाणीक्रियते । न केवलं प्र-वयस्का एवाऽस्मिन् व्यस्ने निमुज्जन्त्य अपि त्व् अल्पव्यस्काश् छात्रा अपि दुर्व्यसनेऽस्मिन्प्रयन्ते दुराचारिभिः । पाश्चात्य-संस्कृति-सेविकाः कन्यका अपि महोत्सवेषु कणेहत्य सुरां पिबन्तीति भवति चिन्ता-विषयः । यद्यपि प्राचीनभारते वर्षे व्यसनम् इदम् अभिजातास्व् अपि नारीषु कासुचित्प्रवर्तमानं प्रमाणीक्रियते तथापि तासां संख्या अतीवस्वल्पा प्रतिभाति । कतिपय-राजगृहान् अतिनिम्नवर्गांश् चाऽपहाय सामान्यतो नार्योऽनेन दूषणेनाऽस्पृष्टा एवासन् । आधुनिकास् तूत्तम-मध्यम-वर्गीया अपि पश्चिमानुगा दूषणम् इदं भूषणं कृत्वाङ्गीकुर्वन्ति ।

लज्जा शालीनता च नारीणां भूषण-द्वयं सर्वत्र प्रशस्यतेतमाम् । किन्तु आधुनिका नार्यो महोत्सवेषु, विवाहेषु, जन-समारोहेषु च निस्त्रपं पुरुषैः सह राज-मार्गेषु नृत्यन्त्यो दृश्यन्ते । एवम् एव महानगर-स्थेषु सम्मिलित-विद्यालेषु युवजन-समक्षं कन्यका वेश्याजनोचित-हाव-भावप्रदर्शन-पुरःसरम् नृत्यन्त्यो दृश्न्ते । इदम् एकतस् तु युवकेष्व अनुशासन-भंग-प्रवृत्तिम् उपजनयति, अपरतश् च कन्यकासूच्छृंखलताम् आसञ्जयति । प्रवृत्तिर् इयं सर्वत्राऽऽलोच्यते, किन्तु प्रभावहीने समाजे यः कश्चिद् यत् किञ्चिद् अपि निर्भयं निर्बाधं च कर्तुम् अलम् अस्ति । सर्वविधाम् आलोचनां तिरस्कृत्य ते स्वमनोवाञ्छितं समुद्धतम् अपि व्यवहारं प्रतिपद्यन्ते ।

पापं शीघ्रं प्रसरति, अपराधः सङ्क्रामको रोग इव अभिवर्धते । अतः सामान्यतोऽभिजाताः प्रतीयमानाः स्त्रीश् चत्वरेषु नृत्यन्तीर् दृष्टवा निर्मल-चित्ताः कुलजाः कन्यका अपि 'तथैवाधुनिकं-प्रचलनम्' इति मन्यमानाः तथैव चिकीर्षन्ति । रोगश् चाऽयम् अप्रतिहत-गतिर् युवकमनःसु मूलम् आबध्नाति । नैषा शुभलक्षणा प्रवृत्तिः । किन्तु को नामैतां निवारयेद् को नाम शिष्टाचारान् पुनः प्रवर्तयेत् समाजे ।

भारतीयं प्राचीनं साहित्यं सर्वस्मिन्न् अपि विश्वस्मिन् लब्ध-प्रतिष्ठम् अनवद्यं चेति विदेशीया अपि विद्वांसः साहित्य-शास्त्रिणश् च मुक्तकण्ठम् उपघोषयन्ति, सोत्साहं च अधीयते स्वस्व-भाषासु सोल्लासम् अनुवदन्ति च । किन्त्व् अधुनातना भारतीया न केवलम् एतद् तिरस्कुर्वन्त्य् अपि तु तद्विषये मनाग् अपि न जानन्ति । अनभिज्ञा अपि ते दुरालोचनाद् न विरमन्ति । पाश्चात्य-साहित्य-पण्डिता अपि

भारतीयाः प्राध्यापका भारतीय-साहित्य-परिचय-वञ्चिता एव सन्ति। बहुभिस् तु कालिदास-नामाऽपि न श्रुतं स्यात्। को नामान्यस् तादृशो दौर्भाग्यवान् देशो यात्रात्म-पूर्वजान् विश्व-प्रसिद्धान् अपि न जानन्ति सुशिक्षिता विद्वांसोऽपि। संस्कृतिस् तु साहित्ये एवाऽभिव्यक्ति लभते। यत्र साहित्यम् एवोपेक्ष्यते तत्र संस्कृति-संरक्षणं कुतः क्रियते। भारतीयं दर्शन-शास्त्रं विश्व-दार्शनिक-साहित्ये विश्वधुरीणम् इति नाविदितं विद्यावताम्। सर्वप्राचीनम् इदं शास्त्रम् अद्यापि स्ववैविध्येन सूक्ष्मेक्षिकया च विस्मयम् आपादयति तत्त्वविदाम्। भारतीयेषु विश्वविद्यालयेषु तद् आनुषांगिकरूपेणैव अधीयते अध्याप्ते च। तत्रत्या दर्शन-शास्त्रिणः प्रायेणाऽनुवाद-मात्रम्-आश्रित्य भारतीय-दर्शनम् आध्यापयन्ति परदर्शन-प्रवीणा आत्मदर्शन-प्रहीणा मूलभाषानभिज्ञास् ते कथं नाम तत्त्वम् अवगाहन्त इति त एव जानन्ति। पाश्चात्यदर्शनम् अत्राऽपि प्राधान्यं भजते, राष्ट्रियं दर्शनम् अधरीकृत्य तद् सुधीजन-सम्मानम् अधिगच्छतीति न कस्य लज्जायै कल्पते इति आनुषङ्गिकमू इदं दर्शनं छात्राणाम् अपि समादरं कथम् अपनुयात्। अतः सर्वोपेक्षा-तिरस्कृतम् इदं दर्शनतत्त्वम् अनुदिनम् उपक्षीयते विद्यालयेषु। आचारविचार-स्रोतसि क्षीणे संस्कृति-प्रवाहो राष्ट्रचेतसि कथं प्रवहेद् इति विचारयन्तु राष्ट्रनायका जनहितैषिणश् च विदुषांवराः।

———

# भारतीयं प्रजातन्त्रम्

यद्यपि भारते वर्षेऽतिप्राचीन-काले प्लातोर् अपि पूर्वम् आसीत् प्रजातन्त्र-शासन-प्रणालिर् आ सिन्धोर् आब्रह्मपुत्रम् अखिलार्यावर्त-व्यापिनी नैक-राज्येषु विराजमाना, यत्र जनता-निर्वाचिता सर्वाधिकार-सम्पन्ना शासन-समितिर् एव शासन-सञ्चालने सर्वतन्त्र-स्वतन्त्रताऽऽसीत्, तथाऽपि काल-क्रमाऽनुसारम् अन्यैर् आचार-विचारैर् इयम् अपि विचार-धारा कालकवलताम् आपद्यत। व्यतीतायां विचार-प्रावृषि, क्षीणे लोकमानसेऽवसन्ने जनशक्ति-स्रोतसि, बहुलीभूते विवेक-धन्वनि, सरस्वतीव विनशने विनाशम् उपगतेयं संस्था-सरित्। कालाऽन्तरे विविधाऽऽक्रमण-कारिभिर् आत्म-शासनसञ्चालनाऽर्थम् आत्म-शासन-पद्धतयः समये समये समारोपिताः। अन्ततो गत्वा आंग्लैस् तत् सर्वम् उच्छिद्य स्वार्थसाधिका शासन-पद्धतिः प्रचालिता। ताम् एवाऽवलम्ब्य वयम् आत्मानं गौरवान्वितं मन्यामहे। दूरातिदूरे दुरासादे काले विलीना प्राचीना प्रजातन्त्र-शासन-प्रणालिर् अधुनोज्जीवयितुम् अशक्या। सर्वथा परिवर्तिता वयम्, अन्यथाभूताऽस्माकं विचार-सरणिर् विपर्यस्तास् तास् ता गौरवाऽस्पदीभूताः संस्थाः, विध्वस्ताऽसावोजस्विनी जन-जीवन-स्रोतस्विनी। सहस्राणि वर्षाणि दासीकृताः, स्वार्थ-साधन-पराः, लुब्धक-वृत्तयो विश्वास-घातिनोऽनृत-वादिनो मिथः कलहायमानाः, पर-प्रत्यय-नेय-बुद्धयः, पर-मुखाऽपेक्षिणः, कर्त्तव्य-पराङ्मुखाः, अधिकाराऽऽक्रोशिनो, देशधर्म-रक्षाऽनपेक्षाः, शासनाऽधिकारि-जन-रञ्जनपराः सर्वविध-व्यवस्था-भञ्जन-मनोरञ्जनाः, साधुजन-कपट-व्यञ्जना वयम् आत्मनो विगत-गौरवम् एव साक्रोशम् उद्घोषयामः। अतः प्राचीन-प्रजातन्त्र-शासन-प्रसङ्गोऽसङ्गतिम् एवातनोति।

प्रजातन्त्रे यदि प्रजा एव शासनम् उपेक्षेरन्, सुशासने कुशासने वोदासीनाः स्युः वैयक्तिक-स्वार्थ-साधनार्थं सामूहिक-हितम् अपास्याऽन्यायम् आचरेयुः, सर्व-विधम् उचितम् अनुचितं व्यवहारं निकारं वा निश्शब्दं निरुद्योगं च सहेरन्, सर्वप्रकारम् अत्याचारं वा निर्विरोधं मर्षयेयुः, दुःखं दारिद्र्यं वा समक्षम् उद्वीक्ष्याऽपि परिमार्ष्टुं न चेष्टेरन्, दुर्भिक्षे सुभिक्षे वाऽनासक्तम् आसीरन्, अन्यायम् अग्रे प्रवर्तमानम् अपि निरोद्धुं विरोद्धुं वैकीभूय नोत्तिष्ठेयुः, ईतिषु समापतितास्व् अपि संहत्य न प्रतिकुर्वीरन्, तदा कथं नाम प्रजातन्त्रम् अवस्थातुं शक्नुयाद् इति न जानीमहे। स्वार्थ-परित्याग-पूर्वकम् एकीभूय राष्ट्र-समुन्नति-साधनम् एव प्रजातन्त्रस्य मूल-भूतो मन्त्र इति प्रसिद्धम्। यत्राऽयम् उपेक्ष्यते यद्वा उपसर्जनीक्रियते तत्र प्रजा-तन्त्रं प्रवर्तत इति मुधावादः।

भारतवर्षे प्रजातन्त्रस्याऽधिष्ठान-भूता लोक-निर्वाचिता केन्द्रीया संसत् प्रान्तीयाश् च विधान-सभाः सर्वत्र स्थापिताः सन्ति। किन्तु तदर्थं निर्वाच्यमानानां सदस्यानां निर्वाचनाऽधिकारोमूढाऽतिमूढानां ग्राम्य-जनानां हस्ते निक्षिप्तो येन धूर्ताचार्यैं राजनीतिज्ञैर् अतिसरलतया विविध-प्रलोभनैर् नाना प्रवञ्चक-वचनैर् असत्य-संगरैर् विप्रलभ्यन्ते सरलास् ते ग्राम्यजनाः। व्यवहारज्ञानशून्याश् च दारिद्र्योपहताश् च दीनहीनाश् च ते प्रशासक-कर्मचारि-प्रभावेणाऽऽतङ्किता वा शासनाऽवहेलनाऽऽशङ्का-शङ्किता वा, धनलुब्धा

वा, दुष्परिणामक्षुब्धा वा सन्तो बहवः स्वमतम् अन्य-मताधीनं कुर्वन्ति । गुणाऽगुणोदासीनेऽस्मिन् शासन-तन्त्रे बुद्धिमन्तो मूर्खैः प्रशिष्यन्ते, निर्वाच्यमानाः सभ्या अपि कदाचिद् असभ्याः स्युर् इत्य् अत्र नास्ति काचिद् विप्रतिपत्तिः । अनियन्त्रिताचार-व्यवहारास् ते प्रतिहत-धर्माऽधर्म-विवेक-प्रसराः स्वशासनाऽधिकार-वशाद् वशीकृत्य सर्वाणि धनोपार्जन-साधनानि सम्पत्ति-संग्रहे समाजन्ति । न केवलं निर्वाचकानां, निर्वाच्या-नाम् अपि योग्यता-मानाऽभावान् नूनम् अयोग्यतैव संसदि विधान-सभासु च विराजते । शासन-तन्त्राऽन-भिज्ञास् ते तत्र क्रियमाणानि भाषणान्य् अपि अवगन्तुम् अक्षमा निद्रा-मुद्रित-नयना नयनाऽभिरामे संसद्-भवने दिवोत्स्वप्नायन्ते । परान्नघस्मरास् ते निद्रालवः स्व-स्वस्थानेषु घर्घरायन्ते । मत-दानाऽवसरे स्वदल-सचेतकेन चेतनाम् आपाद्यमाना हस्तम् उद्यम्य अर्धनिद्रिता एव सपक्ष-पोषं पुष्णन्ति राष्ट्रहितम् । एतदथम् एवैते निर्वाचिताः, इयम् एव तेषां राष्ट्रपरिचर्या । एवं भूतेषु जननायकेषु को दोषः प्रजानां यदि ते न कुर्वन्ति स्वकर्तव्यं, न वा चिन्तयन्ति स्वदेश-हितं, न बध्नन्ति परिकरं स्वराष्ट्ररक्षार्थं, न व्रजन्ति संसारे सत्कार-पात्रतां, न भवन्ति श्रद्धास्पदम् अन्यदेशीयानाम् । यदि तेऽनृतं वदन्ति, वञ्चकवृत्तिम् आश्रयन्ते, शठताम् आचरन्ति, तर्हि को नु खलूपालम्भस्याऽवसरः ।

सन्ति केचन शासक-दले बुद्धिमन्तोऽपि, विवेकवन्तोऽपि, सत्यवादिनोऽपि देशानुरागिणोऽपि, प्रजाहितैषिणोऽपि, गुणगणज्ञा अपि, शासन-तन्त्राभिज्ञा अपि, किन्तु स्वल्पसंख्यास् ते किम् अपि कर्तुम् असमर्था, न क्षमन्ते निरोद्धुं दुरितोपचयं, न पारयन्ते पापौघम् अपवारयितुम्, असहाया इवोद्वीक्षन्ते प्रतिक्षणम् उत्कर्षम् आपद्यमानम् असुरबलम्, अहोरात्रम् उपचीयमानं दानवदलम् । दलहितम् अभि-काङ्क्षमाणास्तेऽपि न समीहन्ते समाधातुम् एतां जटिल-जटिलां परिस्थितिम् । स्वदले विरोधोज्जृम्भाण-भियाऽनिच्छन्तोऽपि ते सर्वम् इदम् आत्मनिकृतिकारं पापाचारं तूष्णीम् एव मर्षयन्ति । बहुसंख्याकस ते राक्षसवृत्तयो धर्मध्वजान् एतान् न तृणम् अपि गणयन्ति । मन्त्रिपदेषु बहुमतानुरोधेन नियुक्तास ते आत्मीयान् एव पुष्णन्ति, मित्राण्य् एव धनैर् अर्चयन्ति, भ्रातॄन् एव पदेषु नियुञ्जन्ति, बन्धुभ्य एव पणपत्राणि प्रतिपादयन्ति, मुक्तहस्तेनोत्कोचं स्वीकृत्य मणिमुक्तारत्नराशीन् आत्मसात् कुर्वन्ति, नानाव्यसनेषु समासक्ता निर्धनधनैः स्वच्छन्दम् अभिरमन्ते । मन्त्रिगणम् एवामोद-प्रमोदासक्तम् अधिगभ्याधीनस्थाः कर्मचारिणोऽपि तेनैव मार्गेण गन्तुम् आरभन्ते । वित्ते दत्तचित्तास् ते कार्यगुणसम्पत्तिम् उपेक्षमाणा हेलयावहेलयन्ति लोकहितं, नाद्रियन्ते मनाग् अपि दारुणां दुर्दशां दरिद्राणाम् । परिणामतोऽनुशासनम् अधरीक्रियते, जनजीवम् अवधीर्यते, योजनाकार्याणि दुरवस्थाम् आपाद्यन्ते, उत्पादनं क्षीयते, अपरिमितं धनम् अवसीयते । सर्वत्रोत्कोचहारिभिः कर्मचारिभिर् उत्पीडयन्ते प्रजाः, कूटव्यवसायो निर्बाधम् अभिवर्धते, महार्घता निष्प्रति-बन्धम् उपचीयते, विद्यमानेऽपि खाद्यान्ने कूटवणिग्भिः कृषीवलैर् वाऽन्नस्य प्रच्छन्नागारेषु निगूढत्वाद् देशे दुर्भिक्षराक्षसो मुखं व्यादाय क्रमते भक्ष्याभावाद् बुभुक्षामृतिर् वदनं विजृम्भ्यासीदति । अवसीदन्ति प्रतिक्षणम् अभिमुखम् अभिवर्तमानम् अवसानम् ईक्षमाणा निस्सहायाः क्षुत्क्षामकण्ठाः कङ्कालभूता लक्षलक्षाणि भारतपुत्राः । सहायताभियानेषु क्रियमाणेष्व् अपि जननाय-कानाम् अधिकारिवर्गस्य च लुण्ठालुण्ठि चलति । लोकमतम् अवक्रेतुम् एते लोकसेवार्थम् उपन्यस्तम् अर्थजातम् आत्मसात् कुर्वन्तीति सुविदितम् अस्ति विदेशीयानाम् अपि । विगत-चीन-पाकिस्तान-युद्ध-

द्वयेऽपि मनुजाऽपसदैर् एभिः संगृहीतम् अर्थजातम् आत्मनो मनोविनोदार्थम् उपयुक्तम् इति जनप्रवादः कस्य न कर्णगोचरीभूतः, केन वा न श्रुतोऽस्य प्रतिश्रुतिः संसद्भवने। किन्त्व् एतस्याऽनुसन्धानार्थं नियुक्तस्याऽपराधाऽन्वेषणपरस्याऽधिकारिणः प्रतिवेदनम् अद्य यावन् न प्रकाश्यते। दलगतप्रतिष्ठा नूनं जनधनावलुण्ठनाद् अतिरिच्यते। एवम् एव 'जीप'-शस्त्र-प्रभृति-सम्बद्धा लोक-विकुत्सिताः परिवादा न पुनरुक्तिम् अर्हन्ति।

उत्तरोत्तरम् असफलताभाजां तिसृणां योजनानां कुप्रभावाद्, विदेशीयानाम् ऋणदाने व्याक्षेपाच् च ऋणाक्रान्ता दुर्-अवस्थाम् अपन्नाऽर्थव्यवस्था शीर्णशक्ति शासनम् अस्थिरं कृत्वा शासक-वर्गं मुद्रा-ऽवमूलनाय विवशम् अकरोत्। मुद्राऽवमूलनम् अपि जनहितम् अवहेल्य विदेशीयनिर्बन्धाऽनुरोधाद् एव कृतम् इति नाऽविदितम् अधुना सुधीजनस्य। मूल्यानाम् अवधारणे नियमाऽभावाद् वा, निष्प्रतिबन्धं नियमभङ्गाद् वा, अधिकारिणाम् औदासीन्याद् वा, व्यापारिणां दुरभिसन्धेर् वाऽहर्निशम् अभिवर्धमाना महार्घता भृशम् उद्वेजयति क्षीयमाणवित्तस्य क्षीणजनस्य चित्तम्। अविचारितरमणीयम् इदम् अवमूलनं मुद्रास्फीतिम् उत्पाद्य वस्तुमूल्यं वर्धयनितराम् इति नूनम् अधुना प्रमाणीक्रियते। उत्पादने वृद्ध्यभावाद् निर्यातस्योपचयाभावाच् च वस्तुमूल्यम् उच्चतमम् अङ्कबिन्दुं स्पृशति। पूवम् अपि कल्पनातीतम् ऋणम् अधुनाऽध्यर्धगुणं जातम् आकाशीयम् उत्सेधम् उपस्पृशति। कोऽपि मन्त्रिमहोदयः स्वाधीनस्थे विभागे अपव्ययम् विरोद्धम् उत्सुको न लक्ष्यते। सर्वत्र कार्यालयेष्व् अभीष्टसंख्यातोऽति-रिच्यतेतराम् अधिकारिवर्गस्य संख्या। तथापि कार्यक्षमतोत्तरोत्तरम् अपचीयते। करसंग्रहणेऽसफलता वोदासीनता वा, करचौर्यं वा करसंख्यानेऽसत्यवादिता वाऽसावधानता वा अधिकारिणाम् अक्षिनिकोचो वोत्कोचो वा सन्त्यनेके हेतवोऽर्थव्यवस्थाया दुरवस्थायाः। एभिः सुपरिचितोऽपि प्रशासकवर्गो निमीलितनेत्रो न किञ्चिद् दिदृक्षते शृण्वन्न् अपि न किञ्चिच्छुश्रूषते केवलं हस्तौ प्रसार्यार्थं जिघृक्षति। सर्वं शून्यं, सर्वंमिथ्या, सर्वं परिहरणीयम् ऋते 'मायाम्' मायामये खल्वसारे संसारे।

समानकार्यार्थं समानम् एव वेतनं दातव्यम् इति संविधाने सुस्पष्टम् उल्लिखितम् अपि शासकवर्गेणैवोपक्ष्याधिकारिषु केन्द्रीय-प्रान्तीयतेतिपक्षद्वयम् उत्पाद्य व्यर्थम् अर्थगता विषमता सम्पाद्यते। भेदनीतिर् इयम् अनुशासनहीनताम् उत्पादयति, उत्कटम् असन्तोषम् उद्भावयति। असन्तुष्टप्रायम् अनुशासनहीनशासनम् अराजकतायै कल्पते। अनुशासनहीनता खलु भूमिर् अविनयस्य, क्षेत्रम् अक्षमतायाः, निधानम् अविवेकस्य, निदानम् उपद्रवाणाम्। इदम् एव सर्वम् अद्याऽक्षि-समक्षम् आपद्यते। विद्यार्थिनोऽपि निरस्तानुशासनाः सर्वविधं शासनम् अतिक्रम्य कम् अपि व्याजम् उपजीव्योपद्रोतुम् उपक्रमन्ते। द्रुतकोपिनस् ते शासकवर्गम् अवधीरयितुम् उद्युक्तैर् विरोधिपक्षैर् उत्तेजिता उद्रिक्तकोपानलाः सर्वं सम्मुखम् आपतितम् अग्निसात्-कृत्यैव सन्तुष्यन्ति। किम् एतेषाम् एतस्याऽक्रोशस्य कारणं, कस् तस्योपशमस्योपाय इति न प्रतिभाति कस्यचिद् अपि विचारविषयः। एवम् एवाध्यापक-वर्गे, श्रमिकसमूहे व्यापारिषु शासनाद् विरक्तिर् विराजते। प्रतिदिनम् एधमानोऽयम् असन्तोषो नूनम् आतङ्काऽऽशङ्काम् उद्वहति। किन्तु दलगत-विसंवादेषु विलीना नेतारस् तस्य समाधाने-ऽनुसन्धातव्ये किमर्थम् एनं व्यर्थं व्याक्षिपन्तीति विबुधजनवेदनीयम् एव संवृत्तम्। अस्य सर्वतो व्याप्तस्या-नुऽशासनाऽभावस्य मूलं नेतृवर्ग एव सर्वदा प्रवर्तमाने स्वार्थमूले विवादेऽसंवादे चाऽनुसन्धातव्यम्।

संसदि विवदमाना दलेषु स्पर्धमानाश्चैते परस्परं यथोच्छृङ्खलं व्यवहरन्ति, पदलिप्सयाऽनुशासनं खण्डशः शकलीकुर्वन्ति, तद् एव लोकस्याऽनुकरणीयं निदर्शनं भवति । संसदि विधानसभासु च क्रियमाणो विवादो विरोधिपक्षाऽवधीरणयैव विधीयते, न तु तत्त्वबोधाय ।

आधुनिक-प्रजातन्त्रस्य जननी ब्रिटिशसंसद् एवोच्यते । नीतिविषये स्खलने सञ्जाते अभिशस्त-कर्मणि समायोगे वा समारोपिते मन्त्रिणः पदच्युतिः स्वयं-सिद्धेव मन्यते प्रजासु । कु०-कीलर-सम्बद्धः परिवादः, आयव्यय-गणना सम्बद्धं रहस्योद्घाटनंचाऽत्राऽविदूरस्थं निदर्शनद्वयम् उपस्थाप्यते । किन्तु भारतीय-प्रजातन्त्रे नेदृशी परम्परा विद्यते । अनेकेषु परिवादेषु विविधेषु चाऽभियोगेषु प्रचारितेष्वपि मन्त्रिभिर् नैव क्रियते पदत्यागो न चैव निराक्रियन्ते तेऽभियोगाः ।

समेषाम् एव मनीषिणां मते जातिवादः प्रजातन्त्रेऽशुभङ्करो व्याधिः स च समूलम् उन्मूलनीयः । किन्तु जातिवादप्रतिवादम् उच्चैर् उद्घोषयन्तोऽपि, मुहुर्मुहुर् निन्दन्तोऽपि दुर्व्यसनम् इदं निर्वाचनकाले "अन्तः शाक्ता बहिश्शैवास्" त एव जननायक मतादानार्थम् आत्मीयां विजेतुम् जातिम् एव पुरस्कृत्य स्वजातिप्रीतिपरिचर्याविषये विकत्थन्ते, ताम् अधिकृत्यैव ईहन्ते, ताम् एव मनसि निधाय निर्वाचन-क्षेत्राणि निर्धारयन्ति । राष्ट्रस्य राजनीतिक-शरीरे विसृप्तं विषमम् इदं विषमप्रतिविधेयम् एव प्रतिभाति । धर्मनिरपेक्षम् अस्मद्राष्ट्रम् इति विष्वक् प्रचार्यतेऽहर्निशम् । किन्तु निर्वाचनकाले नोत्सहन्ते ते मोहमदीये निर्वाचनमण्डले मुस्लिमस्पर्धिन मुस्लिमेतरम् एकमपि प्रत्याशिनं प्रस्तोतुम् । एतद्विपरीतञ् च विशुद्धे हिन्दू निर्वाचनक्षेत्रे हिन्दूस्पर्धिनं मोहमदीयं निर्वाचनार्थं नोत्थापयन्ति । जानन्ति ते स्ववचसो निस्सारताम् । 'सत्यमेव जयते' इत्यत्र जयति खलु वचोविजिह्मता । यत्र पटेलमहोदयेन देशीयराज्यानां राष्ट्रीय-प्रवाहस्य मुख्यधारायां विलयं कृत्वा राष्ट्रीयैकतां सुदृढीकृत्य विवेकशीलता प्रमाणीकृता, तत्र विगतपञ्चदशवर्षेषु विविधव्याजान् आश्रित्य नानादलैः पृथग्वादितायाः पताकाम् उत्तोल्य विद्रोहात्मिकां प्रवृत्तिं प्रदर्श्य क्षीणशक्ति केन्द्रीयशासनं विवशं कृत्वा सुसस्थापिता अपि राज्यसीम्नो बलाद् भङ्क्त्वा यथेच्छं राज्यान्तराणि परिकल्पितानि । तैः प्रोत्साहिताः स्वार्थम् ईहमानाः सम्प्रदायवादिनोऽन्येऽपि तदर्थम आन्दोलनानि सञ्चालयन्ति । प्रान्तानां केन्द्रेण सम्बन्धविषयेऽपि परिस्थितिः प्रतिदिनं विक्रियते । सबला मुख्यमन्त्रिणः प्रधानमन्त्रि-चयने स्वहस्तं प्रक्षिप्य केन्द्रशासनम् आत्मसात्कृत्य भयावहां परिस्थितिम् उत्पादयितुकामाः प्रतीयन्ते । केन्द्रीयम् अनुशासनम् अपि व्युत्क्रम्य यथेच्छम् आचरन्ति प्रांतीया मंत्रिणः प्रांतहितैषिणश् च केंद्रीयमंत्रिणः पदपरित्यागभयं प्रदर्श्य केंद्रीय नीतीर् निर्णयांश् च परिवर्तयंति परस्परं कलहायमानास् तेऽन्यकार्येषु हस्तक्षेपं कुर्वाणाः प्रजासु वैमनस्यम् उत्पादयंति, इतरेतरं परिभवितुम् ईहन्ते च । नेयं स्थितिर् देशहिताय कल्पते ।

केन्द्रस्य निस्सारतां जानन्त एव प्रतिवेशिनो देशा भारतीयान् अर्धचन्द्रं दत्त्वा स्वस्व-देशेभ्यो निस्सङ्कोचम् उत्सारयन्ति । हृत-सर्वस्वा दण्डघातम् आहतास् ते कथमपिप्राणत्राणायाऽपद्रुत्यद्रव्यहीनाः स्वदेशं प्रविश्यापीतस्ततः परिभ्रमन्तो दुर्दशाम् अनुभवन्ति न तेषां दुःखप्रच्छकः कश्चित् प्रजातन्त्रे प्रतिभाति इमाम् एव दुर्बलताम् उद्वीक्ष्योत्साहितो प्रातिवेशिनो देशम् इमम् आक्रमितुम् । मित्रम्मन्यैर् अपि देशैर् नोपकृता वयम् एतस्मिन् विपत्काले । प्रजानां मतम् अनादृत्य, भावान् अभिभूय, विनयम् अवम-न्याव्यावहारिकीं कल्पनाप्रसूताम् एकव्यक्तिप्रभूतां वैदेशीकीं नीतिम् अनुसृत्य सर्वत्र विदेशेषु परिभूता

